*Sara*—यस्तु ह्रस्या हृष्यति तस्य पूनर्वृद्धिर्न भवति। Also see "पौरुषहीनात् &c. (in Malli).

CHARCHA

1. सम्पदा—सम+पद+क्विप् भावे सम्पत् wealth, fortune. तया। हेतौ तया।

2. सुस्थिर &c.—सुष्ठु स्थिरः सुस्थिरः quite at ease, प्रादि तत्—सुस्थिरम् आत्मानं मन्यते इति सुस्थिर+मन+खश कर्त्तरि feels himself well placed, उपपदतत्—। The rule quoted by Malli means— खश is attached and चिन् too, after मन of the दिवादि class if the thought relates to the agent himself, *i. e.* where the agent thinks of himself.

3. स्वल्पया—सुष्ठु अल्पा स्वल्पा very small, प्रादितत्—। तया। Qual. सम्पदा।

4. अपि—Implies समुच्चय। Thus—न केवलं प्रभूतया यः सुस्थिरम्मन्यः तं न वर्द्धयति, किन्तु स्वल्पया अपि यः सुस्थिरम्मन्यः तं न वर्द्धयति। *Or* construe — यः सुस्थिरम्मन्यः भवति मन्ये स्वल्पया अपि सम्पदा कृतकृत्यो विधिः तां न वर्द्धयति as in our Prak।

5. कृतकृत्यः—कृ+क्यप् कर्मणि कृत्यम् duty. कृतं कृत्यमनेन He who has done duty वहु—। Qual. विधिः।

6. मन्ये—मन+लट् ए। This is a sign of उत्प्रेक्षा। मन्यते, मेने मंस्यते, अमंस्त।

7. वर्द्धयति—वृध+णिच्+लट् तिप enhances. वर्द्धते ववृधे, वर्द्धिष्यते—वर्त्स्यते, अवर्द्धिष्ट—अवृधत्।

8. *Voice*— येन सुस्थिरम्मन्येन भूयते...सा कृतकृत्येन विधिना न वर्द्ध्यते... मन्यते (मया)।

*33. Advancement must be over the carcase of enemies.*

समूलघातमघ्नन्तः परान्नोद्यन्ति मानिनः।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः॥ ३३॥

*Prak*— मानिनः परान् अघ्नन्तः न उद्यन्ति [When the high or the spirited advance, they do it over the carcase of their enemies ]. Why so— समूलघातम् अघ्नन्तः न उद्यन्ति [ They first kill their enemies and then they advance, hence advance is over corpses ]. What is that like ?— तत्र रविः उदाहरणम् [ This is like the sun rising ]. How so ? प्रध्वंसितान्धतमसः रविः [ The sun rises after having thoroughly dispersed gloom ]. 33.

*Prose*—मानिनः परान् समूलघातम् अघ्नन्तः न उद्यन्ति । तत्र प्रध्वंसितान्धतमसः रविः उदाहरणम् ॥ ३३ ॥

*Eng*—The spirited do not rise without killing enemies with the destruction of their root. An instance thereof is the sun that has thoroughly dispersed the blinding gloom. 33.

*Beng.*—তেজস্বী পুরুষ ঐশ্বর্য্য লাভ করেন সত্য, কিন্তু শত্রুকে সমূলে উচ্ছিন্ন না করিয়া পারেন না। দেখ সূর্য্যও অন্ধকারের মূলোচ্ছেদ না করিয়া উদিত হন না ॥ ৩৩ ॥

*Expl.*—Darkness is the enemy of the sun. The sunfirst kills darkness and then rises. Learn your lesson from his example. You can not rise in life without weeding out your enemies root and branch. 33.

*Malli*—किञ्च पराक्रमलब्ध एव उदयो नान्यलब्ध 1 इत्याह समूलेति । 'मानिनः अभिमानिनः परान् शत्रून् समूलं हत्वा 'समूलघातम् अघ्नन्तः अनुन्मूलयन्तः इत्यर्थः [ 'समूलाकृतजीवेषु हनकृञ्ग्रहः इति णमुल्प्रत्ययः । 'कषादिषु यथाविध्यनुप्रयोगः' इति हन्तेरनुप्रयोगः 2 ] 'न उद्यन्ति' किन्तु हत्वा एव उद्यन्ति इत्यर्थः । 'तत्र हत्वैव उदयः । अन्धयति इति 'अन्धं' गाढं तमः 'अन्धतमसम् । [ 'ध्वान्तं गाढान्धतमसम् इत्यमरः । 'अवसमन्धेभ्यस्तमसः इति अच्प्रत्ययः ] 'प्रध्वंसितम् अन्धतमसं' येन सः । उदयात् प्राक् इति भावः । रविः उदाहरणं दृष्टान्तः [ अत्रापि 'दृष्टान्तोऽत्र महार्णवः' इतिवत् उपमालङ्कारो, न दृष्टान्तः इति द्रष्टव्यम् 3 ] ॥ ३३ ॥

1, Besides उदय is what is gained by valour and by nothing else. 2. For explanation of the rules see *Charcha*, 3, It has to be noted that as in 'दृष्टान्तोऽत्र महार्णवः' ( sl. 3I ) the अलङ्कार here is उपमा and not दृष्टान्त ।

*Sara*—मानी रविरिव शत्रून् तिमिराणीव अनुच्छिद्य कृतकृत्यो न भवति ॥ ३६

CHARCHA

1. समूलघातम्—मूलेन सह वर्त्तमानम् समूलम् वहु—। समूलम् हत्वा इति समूल हन+णमुल् भावे समूलघातम् by striking at the root. उपपदतत् ; Qual the क्रिया in अघ्नन्तः । See next.

2. अघ्नन्तः—घ्नन्ति इति हन+शतृ कर्त्तरि घ्नन्तः those that kill. न घ्नन्तः नञ्तत् । Qual मानिनः । The rule 'समूल—' means—हन् क्र and ग्रह take णमुल after समूल अकृत and जीव respectevely in the कर्मकारक as उपपद । Then the rule 'कषादिषु—' means—In examples from Pan 3. 4. 34 to Pan. 34.4.5 the finite root must be got from the one to which णमुल is attached. Hence समूलघातम्, अमारयन्तः &c. are inadmissible.

3. उद्यन्ति—उद्+इ+लट् झि ( अन्ति ) । एति इयाय, एष्यति, अगात् ।

4. मानिनः—मननम् इति मन+घञ् भावे मानः self-respect, spirit. सः अस्ति एषाम इति मान+इनि मत्वर्थे । Mallis अभिमानिनः means तेजस्विनः ।

5. प्रध्वंसित &c—प्र+ध्वंस+णिच क्त कर्मणि प्रध्वंसित thoroughghly extirpated. अन्ध+णिच+स्वार्थे ( चुरादि )+अच कर्त्तरि अन्धम् blinding. अन्धं तमः इति अन्ध+तमस+अच् समासान्त अन्धतमसम् blinding darkness. प्रध्वंसितम् अन्धतमसम् अनेन, वहु—। Qual रविः । The rule 'अव—'' means अच् is attached as समासान्त after compounds ending in तमस with अव or

सम or अन्य preceding, समासान्त affixes are attached स्वार्थे ; hence usually the gender is unaltered. Here तमस is neuter ; the तत्पुरुष ending in तमस is also neuter. So the final word with अच is अन्धतमसम in the neuter.

9. उदाहरणम्—उदाह्रियते अनेन इति उद्+आ+हृ+ल्युट करणे Example. In App. with रविः।

7. *Voice*—मानिभिः···अधर्नाद्भिः न उदीयते—तमसेन रविणा उदाहरणेन (भूयते)।

34. *Existence is threatened, when an enemy is living.*

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ।
अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥ ३४ ॥

*Prak*—विपक्षम् अखिलीकृत्य प्रतिष्ठा दुर्लभा खलु [ No firm footing can be obtained without extirpating enemies ]. How is that ?— धूलिं पंकताम् अनीत्वा उदकं न अवतिष्ठते [Water does not collect so long as there is dust on the road. The dust is first reduced to mud and then the the streets become water-logged ],

*Prose*—विपक्षम् अखिलीकृत्य प्रतिष्ठा दुर्लभा खलु भवति। उदकं धूलिं पङ्कताम अनीत्वा न अवतिष्ठते ॥ ३४ ॥

Eng—Stability is indeed difficult to attain [ *Or*—The very existence is difficult to maintain ] without extirpating the enemies, water cannot stay on without reducing dust to mud. 34.

Beng.—শত্রুর উচ্ছেদ না করিলে নিজেরও স্থিতি দুর্ঘট হইয়া পড়ে। যতক্ষণ ধূলি কাদা না হইয়া যায় ততক্ষণ রাস্তায় জল দাঁড়ায় না ॥৩৪॥

Expl—See Prak. above,

*Malli*—किञ्च अनुच्छिन्नशत्रोः प्रतिष्ठैव दुर्घटा इत्याह विपक्षमिति 1। "विपक्षं शत्रुम् अखिलीकृत्य खिलम उत्सन्नम अकृत्वा अनुन्मूल्य इत्यर्थः प्रतिष्ठा दुर्लभा खलु। तथाहि 'उदकं कर्त्तृ 'धूलिं' स्वपरिभाविनीमिति भावः

'पङ्कताम् अनीत्वा नाधःकृता इत्यर्थः 'न अवतिष्ठते किन्तु नीत्वैव तिष्ठति इत्यर्थः [ 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। प्रतिबिम्बनापेक्ष दृष्टान्तालङ्कारः ] ॥ ३४ ॥

I. Moreover the very existence is unattainable by one who has not exterminated his enemies; so he says विपक्ष &c. 2. The अलङ्कार is दृष्टान्त which arises when the essentials are reflected in a different वाक्य।

*Sara*—अनुतप्ताग्नि रिपौ दुर्लभा पुनरात्मनः स्थितिः। पङ्क एव ऊर्ध्वं तिष्ठति। यावत धूलिः कृतस्तावदुदकम ॥ २५ ॥

CHARCHA

I. विपक्षम्—विरुद्धः पक्षः अस्य विपक्षः or विरुद्धपक्षः of the opposite party, antagonist, बहु—। तम।

2. अखिलीकृत्य—खिल exterminated उत्सन्न (Malli.). अखिलं खिलं सम्पद्यमानं कृत्वा इति खिल+च्वि+कृ+ल्यप खिलीकृत्य having extirpated, गतितत—। न खिलीकृत्य, नञ तत—। खिल meaning उत्सन्न is rare. In खलीभूतं विभानानां तदापातभयात् पथि it means "blocked." From which with some imagination we may arrive at उत्सन्न। Or—खिलीकृत्य blocking, may mean 'heaping by destroyal.

3. प्रतिष्ठा—प्रति+स्था+अङ भावे existence, stability. Nom to भवति understood,

4. दुर्लभा—दुःखेन लभ्यते इति दुर्+लभ+खल कर्मणि स्त्रियाम।

5, अनीत्वा—न नीत्वा, नञ तत—। सूत्र='अनञ्पूर्वे' इति निषेधात न ल्यप्।

6, पङ्कताम्=Here Malli's अधःकृताः has to be scrutinised. अधस् is not a गति। अधःकृत्वा uncompounded seems better, Some think that the साक्षात्प्रभृति list is आकृतिगण; So a defence may be given by including अधस् in the list.

7. अवतिष्ठते—अव+स्था+लट ते। तिष्ठति—ते, वस्थौ—वस्थ,

स्थास्वति···ते अस्थात—अस्थित। The rule for the आत्मनेपद ( see Malli) means स्था ( परस्मैपद ), takes the आत्मनेपद when preceded by सम, अव प्र, वि। Nom उदकम।

8. *Voice*—··· प्रतिष्ठया दुर्लभया...(भूयत ) उदकेन···अवस्थीयते ।

35. *Even a single enemy is a source of danger.*

म्रियते यावदेकोऽपि रिपुस्तावत् कुतः सुखम् ।
पुरः क्लिश्नाति सोमं हि सैंहिकेयोऽसुरद्रुहाम् ॥ ३५ ॥

*Prak*—Well, I have but few enemies— यावत एकोऽपि रिपुः म्रियते तावत सुखं कुतः [ Happiness is out of the question so long as there is even one enemy about]. What can a single enemy do ?—सैंहिकेयः असुरद्रुहां पुरः सोमं क्लिश्नाति [Rahu alone even attacks moondefying the gods even )

*Prose*—एकोऽपि रिपुः यावत म्रियते तावत सुखं कुतः ? हि सैंहिकेयः ( राहुः ) असुरद्रुहां पुरः सोमं किल्श्नाति ॥ ३५ ॥

Eng,—Whence is peace so long as even a single enemy survives ? Simhika's son Rahu tortures the moon before ( the very eyes of ) the slayers of the Asuras i. e. before the gods even. 35.

*Beng*—যতক্ষণ একটী মাত্রও শত্রু বাঁচিয়া আছে ততক্ষণ সুখ কোথায় ? সিংহিকার পুত্র রাহু একা হইলেও অসুরশত্রু দেবগণের সকলের চক্ষের উপরে সে চন্দ্রকে গ্রাস করে ॥৩৫॥

Expl.—See *Prak.* above.

Malli.—ननु अयं शिशुपाल एकाकी मे किं करिष्यति इत्याशङ्क्य आह म्रियत इति। एकः अपि रिपुः यावत म्रियते अवतिष्ठते [ "धृङ् अवस्थाने" इति धातोस्तौदादिकात कर्तरि लट। "रिङ् शयगलिङ्क्षु" इति रिङादेशः 1 ] "तावत तदवधि 'सुखं' कुतः [ "यावत्तावच्च साकल्यऽवधौ—इत्यमरः ] । तथा 'हि' सिंहिकाया अपत्यं पुमान 'सैंहिकेय.' राहुः [ तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः इत्यमरः । "स्त्रीभ्यो ढक" ] "असुरद्रुहां देवानां 'पुरः'

अत्र 'सोम' क्लिश्नाति बाधते (? बाधते)। प्राचुर्यात सोमग्रहणं सूर्यश्च इति भावः। तस्मादेकोऽपि शत्रुरुच्छेत्तव्य इति भावः। "अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत्" इति 2 तात्पर्यम [ विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः 3 ] ॥ ३५ ॥

1. See *Charcha.* 2, Residue of fire debt and enemy must not be allowed to remain. 3. The अलङ्कार is अर्थान्तरन्यास in which the general is supported by the particular.

## CHARCHA

1. म्रियते—मृ तुदादि+लट ते कर्त्तरि। Exists, दम्र, धरियते, अमृत। Malli's steps are मृ+ते=मृ+ते+('तुदादिभ्यः शः')=म्रि+अ+ते (by 'रिङ—' Malli, )=म्रिय+अ+ते ('अचि श्नु धातुभ्रुवां य्वोरियङुवङौ')=म्रियते। The rule 'रिङ—' means—when श of the तुदादि roots, यक or a य of आशीर्लिङ follows, ऋ of the root preceding becomes रि। Nom. रिपुः।

2. पुरः—पूर्वस्मिन् देशे इति पूर्व+ङि (७मी)+असि स्वार्थे। Here पूर्व becomes पुर् by 'पूर्वाधरावराणामसि पुरधवश्चैषाम'। अव्यय। अधि ७मी ; or सप्तम्यर्थस्य उक्तत्वात प्रातिपदिकार्थे प्रथमा।

3. क्लिश्नाति—क्लिश्नाति—क्लिश+लट ति। चिक्लश, क्लेक्ष्यति,—अक्लेशीत अक्लिक्षत। Nom. क्लेशितव्यः।

4. सोमम—Malli. says 'प्राचुर्यात सोमग्रहणम' *i. e.*, the poet speaks of the moon only, because the eclipse of the moon takes place more frequently than that of the sun. Though the oppress-sion of the moon is directly mentioned, that of the sun is not altogether ignored. Comp 'तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत। हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम ॥"—Sl. 49. *infra.* Hence malli. adds 'सूर्यश्च इति भावः'। Obj. of क्लिश्नाति।

5. हि—'हि हेतावधारणे' इत्यमरः। Malli. takes it हेतौ, for he begins the second half with हि—'तथाहि' &c. We may also have it अवधारण construing as—किं लक्ष्मातिं हि किं लक्ष्मातिरेव।

9. सैंहिकेयः—सिंहिका was a राक्षसी the mother of राहु। सिंहिकाया अपत्यं पुमान् इति सिंहिका+ढक्=सैंहिकेयः। The rule for ढक् is 'स्त्रीभ्यो ढक्'—स्त्रीप्रत्ययान्त words take ढक् in the sense तस्य अपत्यम्। We do not get अण् by 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' 'अतद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः' because सिंहिका is neither a नदी nor a मानुषी।

10. असुरद्रुहाम्—असुरेभ्यो द्रुह्यन्ति इति असुर+द्रुह्+क्विप्. कर्त्तरि असुरद्रुहः those who fight against the Asuras, उपपदतत्—। तेषाम्। षष्ठी by 'षष्ठी चानादरे' 'षष्ठी शेषे' 'षष्ठी चतस्थप्रत्ययेन'। Refers to the gods. Also see under जगद्द्रुहाम्, Canto I, sl. 38.

8. *Voice*—एकेन रिपुणा सुखेन (भूयते) ...सैंहिकेयेन सोमः क्लिश्यते।

### 36. *Deeds alone make a friend or a foe.*

**सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः।**
**स्यातामित्रौ मित्रे च सहजप्राकृतावपि॥ ३६॥**

*Prak*— कृत्रिमः सखा शत्रुश्च गरीयान् [ A friend or a foe made by deeds is really what counts]. Why so?—तौ हि कार्यतः [ This is for the very reason that they are made so by deeds ]. All friends and foes are so through deeds—सहजप्राकृतौ अपि अमित्रौ मित्रे च स्याताम् [ No ; there are other kinds of friends and foes such as the in-born and the natural ]. 36.

*Prose*—As in Prak.

Eng—An incidental friend or foe is of great moment because these two are made by deeds. There

may be friends or foes again inborn or natural. [ malli. construes the second half differently (See *Charcha*) ] . 36,

*Beng*—শত্রু ও মিত্রের মধ্যে কৃত্রিমই গুরুতর, কারণ উহারা কার্য্য হইতে হইয়া থাকে। আবার সহজ ও প্রাকৃত এই দুই প্রকারেরও শত্রু ও মিত্র হইতে পারে ॥৩৬॥

Exp.—Of friends and foes there are different kinds mentioned in the Sastras. First come the सहज or inborn friends and foes. Sons of the sisters of the parents are सहज friends, father's brothers and their sons are सहज foes. Next are the natural or प्राकृत friends and foes. The latter are such by possessing neighbouring land with a common boundary, the former's land is not of this character. But the Sastras lay particular emphasis on friends and foes created by deeds—कृत्रिम friends and foes. Friendship or enmity thus incurred is abiding and lasts for life. 36

*Malli*—ननु क्षुद्रोऽयं चैद्यः किं नः करिष्यति इत्याशङ्क्य तस्य बलवत्तां वक्तुं मित्रामित्रबलाबलविवेकं तावत् करोति—सखेति 1। क्रियया उपकारापकाराख्यतद्रूपया निर्वृत्तः 'कृत्रिमः' [ 'ड्वितः क्त्रिः' "क्त्रेर्मम्नित्यम्" ] 'सखा' सुहृद् 'गरीयान्' बलवान्। एकः (? एषः) 'शत्रुश्च' कृत्रिमो गरीयान्। कुतः—'हि' यस्मात् 'तौ' कृत्रिममित्रशत्रू 'कार्यजौ' उपकारापकाररूपकार्यजन्यत्वात् निर्वृत्तौ इति शेषः। उक्त-कार्योपाधेः यावज्जीवम् अनपायात् अनयोः मित्रामित्रभावोऽपि अनपायी इति गरीयस्त्वम् 2 इति। सहजप्राकृतौ तु नैवम् इत्याह—सहजाताविति—सह जातः 'सहजः' एकशरीरावयवत्वात् [ तत्र सहजं मित्रं मातृष्वसेय-पितृष्वसेयादिः। सहजशत्रुस्तु पितृव्यतत्पुत्रादिः ]। प्रकृत्या सिद्धः प्राकृतः" पूर्वोक्तसहजकृत्रिमलक्षण-रहितः इत्यर्थः [ तत्र विषयान्तरः ( ? स्वविषयानन्तरः ) 3 प्राकृतः शत्रुः तदनन्तरः 4 ( ? तदन्तरः ) प्राकृतं मित्रम् ] 'अपि त्वर्थे'। तौ 'सहजप्राकृतौ' शत्रुः ( ? 'अमित्रौ' शत्रुः ) 'मित्रं च स्याताम्'। तौ आत्मकार्यजत्वात् अनियमेन उभयरूपतामापद्येते न कृत्रिमशत्रुमित्रे 5। कृत्रिमः

शत्रुः शत्रुरेव मित्रञ्च मित्रमेव इति कृत्रिमावेव मित्रामित्रौ गरीयांसौ ननु सहजौ नापि प्राकृतौ इत्यर्थः। अनेन कृत्रिमत्वं सर्वापवादि इति सिद्धम्6 ३६ ॥

1. Discussion is done of the importance or non-importance of friends and foes. 2 The reason is—arising from this action lasts for life, so their friendliness or unfriendliness is permanent; hence the importance. 3. विषयः अनन्तरः separated by another's land (Char.) 4. तेन विषयेण अनन्तरः not separated by another's land (Char). 5. These two are not invariably friend or foe but by their acts may acquire either character; not so the friends or foes of the कृत्रिम class. 6, This proves that कृत्रिमत्व overrules all other considerations.

Sara—कार्यत एव आत्यन्तिकः शत्रुर्वा सखा वा जायते। सहजौ प्राकृतौ वा तौ नात्यन्तं तथा ॥ ३६ ॥

CHARCHA

1. गरीयान्—अतिशयेन गुरुः इति गुरु+ईयसुन् =गर्+ईयसुन्= गरीयान् of great importance. The ईयसुन् implies no comparison here; for if it did, we should have got गरिष्ठ—there being three things to compare—कृत्रिम् सहज and प्राकृत। Comp also महीयसाम्, sl. 31.

2. कृत्रिम:—क्रियया निर्वृत्तः इति कृ+क्ति भावे+मप् (तद्धित) = कृत्रिमः rendered by act. The rule "ड्वितः—" means—Roots that drop ड् take क्त्रि to indicate भाव or any कारक except कर्त्ता। The form expected is कृत्रि meaning क्रिया act. But कृत्रि does not exist as an independent word. The rule 'क्त्रेः—'directs the तद्धित affix मप् to be always attached to such forms in the sense तेन निर्वृत्तम्। Hence we say क्रियया निर्वृत्तम् instead of कृत्या निर्वृत्तम्। Qual. सखा &c.

4. कायतः—कायात् or कार्येण इति काय+ङसि or टा+तसि स्वार्थे।

5, स्याताम्—अस+लिङ् तताम्। सम्भावनायां लिङ् (Malli); see under अपि below. Or शक्ति लिङ्, see अपि below.

6. अमित्रौ—मित्र friend (nuter), न मित्रम् अमित्र नञ् तत्—नौ। Pred to सहजप्राकृतौ (Malli); see under अपि or nom. to (स्याताम्) (see under अपि)। Here by the rule 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' we expect अमित्रम् in the neuter. Hence Haradatta derive अमित्र, with इत्र attached to अम 'to pain,' Bhattoji however thinks that the rule "द्वावमित्रच्छात्र पुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि" (Pan. Lingannsasana) specially provides for the masculine with a नञ्तत्—।

6. सहज &c.—सहजात इति सह+जन्+ड कर्त्तरि भूते सहजः, उपपद तत्—। प्रकृत्या सिद्ध इति प्रकृति+अण् शेष प्राकृतः। सहजश्च प्राकृतश्च, द्वन्द्व। Nom. to स्याताम्। (Malli); or pred. to अमित्रौ and मित्र। See under अपि। Here Malli. says "विषयान्तरः प्राकृतः शत्रुः"—Kings are enemies when their kingdoms are separated by another's kingdom. This is not true. Enmity arises through clashing of interests, boundary disputes &c. if the kinglom are continguous, and not when separated. विषयान्तरः seems to be a copyist slip for विषयानन्तरः and तदनन्तरः following is a slip for तदन्तरः। This is confirmed by Amara where we read "विषयानन्तरो राजा शत्रुर्मित्रमतः परम्"—A king with a contiguoucs kingdom is an enemy, others are friends.

7, अपि—Malli. remarks "अपि त्वर्थे"—अपि has the sense of तु i. e, it implies भेद। सहजप्राकृतौ अमित्रौ अपि—सहज प्राकृतौ तु। The construction is सहजप्राकृतौ तु अमित्रौ मित्रे चस्याताम्—सहज and प्राकृत on the other hand may be अमित्र or मित्र as The well. implication is that कृत्रिम is

always either a friend or a foe, it cannot change its character. The sense suits well. But it is difficult to cite an instance cf अपि used in the sense of तु। We threfore suggest the construction—अमित्रौ मित्रं च सहज-प्राकृतौ अपि स यातास।

8. *Voice*—कृत्रिमेण सख्या शत्रुणा च गरीयसा (भूयते) सहज-प्राकृताभ्याम...अमित्राभ्यां मित्राभ्यां च भूयेत। (अस changes to भू)।

*37. Service and disservice alone mark the friend and the foe.*

**उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा।**
**उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ ३७ ॥**

*Prak.*—उपकर्त्रा अरिणा सन्धिः (स्यात्) [If a foe serves a good turn let there be peace with him, he has ceased to be a foe], That is reasonable—अपकारिणा मित्रेण न सन्धिः [If a friend injures your cause, cut him for good]. That is rather hard—उपकारापकारौ हि एतयोः लक्षणं लक्ष्यम् . [Why do you think so ? Have you not just now admitted that service indicates the friend and dis-service the enemy ?] 57.

*Prose*—उपकर्त्रा अरिणा (अपि) सन्धिः (स्यात्)। अपकारिणा मित्रेण (अपि) सन्धिः न। हि उपकारापकारौ एतयोः लक्षणं लक्ष्यम् (द्रष्टव्यम्) ॥३७॥

*Eng.*—There may be peace with a foe that renders service, not with a friend that does disservice. Service and dis-service alone are to be taken as guides of these. 37,

*Beng*—শত্রু যদি উপকার করে তাহার সহিত সন্ধি করা উচিত। অপকার করিলে মিত্রের সহিত ও সন্ধি করিবে না। উপকার ও অপকারই মিত্র ও শত্রুর পরিচয় দেয় ॥৩৭॥

*Expl.*—See *Prak* and *Eng*. above.

*Malli*—एवं चेत् अस्माकं पैतृष्वसेयः शिशुपालः सहजमित्रत्वात् सन्धातव्यः न तु यातव्यः इत्यत आह उपकर्त्रेति 1। 'उपकर्त्रा उपकारकारिणा 'अरिणा' अपि सहजेन प्राकृतेन वा इति शेषः 'सन्धिः' कार्यः अरित्वापवादेन कृत्रिममित्रताया बलीयस्याः यावज्जीवभाविन्याः तत उत्पन्नत्वात् इति भावः 2 एवम् 'अपकारिणा मित्रेण' अपि सहजेन प्राकृतेन वा इति शेषः सन्धिः न कार्यः मित्रत्वापवादेन कृत्रिमशत्रुताया बलीयस्या यावज्जीवनभाविन्याः तत उत्पन्नत्वात् 3 इति भावः। ननु कथं साक्षात् अरिणा सन्धानात् मित्रेण विग्रहात् इत्याशङ्क्य क्रियया तदुभयोर्वैपरीत्यात् अदोष 4 इत्याह—'हि यस्मात् 'उपकारापकारौ' एव 'अनयोः' मित्रामित्रयोः लक्षणं स्वरूपं 'लक्ष्यं' द्रष्टव्यम्। उपकर्त्ता एव मित्रम् अपकर्त्ता एव शत्रुः इत्यर्थः। तस्मात् सहजमित्रत्वेऽपि चैद्यः क्रियया शत्रुत्वात् यातव्य एव इति भावः॥ ३७॥

1, If so, it follows that our father's sister's son Sisupala has to be conciliated and not attacked, So he says उपकर्त्रा &c.

2. Because friendliness establishedby deeds, and with a stronger tie lasting for life, has appeared in him setting aside his unfriendliness, 3. As in above. 4. ननु ec.—well how can peace be with a direct enemy and war with a friend ? On this he says ( by हि &c. )—This state has been reversed by deeds, hence no blame lies,

*Sara*—उपकारी चेत अरिरपि सन्धातव्यः, अथ मित्रमपि यातव्यं यद्यपकारि।

CHARCH

1. उपकर्त्रा—उप+कृ+तृच कर्त्तरि उपकर्त्ता benefactor. तेन॥ अरिणा has उक्ता सहशब्दयोगे ३या।

2. सन्धिः—सम्+धा+कि भावे सन्धिः peace. Nom. to स्यात्, or उक्तकर्म of क्रियते understood.

3. अपकारिणा—अप+कृ+णिनि+कर्त्तरि साधुकारिणि अपकारिन् injurer. तेन॥ मित्रेण has सहशब्दशब्दयोगे ३या।

4. उपकार &c,—उप+कृ+घञ् भावे उपकारः service. अप+कृ+

घञ् भावे अपकारः dis-service उपकारश्च अपकारश्च, द्वन्द्व । Same case with लक्षणम् ।

5. लक्ष्यम—लक्ष+णिच्+यत् कर्मणि has to be noted. Agrees with लक्षणम् । विधेयप्राधान्यात् क्लीवत्वम ।

6. लक्षणम्—लक्ष्यते अनेन इति लक्ष+णिच्+ल्युट् करणे लक्षणम् indicator सूचकम् । Malli. has स्वरूपम् essence, which is rather loose. It seems better to say that उपकार indicates the friend, than that उपकार is the essence of a friend. This is predicated of उपकार and अपकार separately. उपकार is the लक्षण of मित्र and अपकार of अरि ।

7. *Voice*—...मित्त्रेण (भूयते) or मित्त्रम् (कुर्य्यात्) ।

38. *You have wronged Sisupala by seizing Rukmini.*

त्वया विप्रकृतश्चैद्यो रुक्मिणीं हरता हरे ।
बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ ३८ ॥

Prak.— हे हरे, त्वया चैद्यो विप्रकृतः [ You have injured Sisupala, O Hari ]. How so ?— रुक्मिणीं हरता त्वया [ You have injured him by seizing Rukmini who was betrothed to him ], That is long past—स्त्रियो हि बद्धमूलस्य वैरतरोः महत् मूलम् [Enmity is ineffaceable when a woman is at the root of it. ]

Prose—हे हरे, रुक्मिणीं हरता त्वया चैद्यो विप्रकृतः । बद्धमूलस्य वैरतरोः स्त्रियः महत् मूलं हि ॥ ३८ ॥

*Eng.*—You seizing Rukmini, O Hari, the lord of the Chedis was wronged. Of a tree of enmity that has taken root, women are a strong root. 38.

*Beng.*—ওহে হরি, রুক্মিণীকে বলপূর্ব্বক গ্রহণ করিয়া তুমি শিশুপালের অপকারী হইয়াছ। শত্রুতারূপ মহাবৃক্ষ বদ্ধমূল হইলে, প্রায়ই দেখা যায় রমণী তাহার মহামূল ॥৩৮॥

*Expl.*—If you examine the records of great enmities in the past, you will often find that a woman is

at the root of it. Witness that between Sunda and Upasunda or that between Rama and Ravana or the siege of Troy. Now Rukmini was Sisupala's betrothed, but you appropriated her to yourself by force, That is an injury which Sisupala can never forget. By it you have become his कृत्रिम enemy. 38,

Malli—अथ चैद्यस्य कृत्रिमशत्रुत्वं चतुर्भिराह त्वयेति । हे हरे रुक्मिणीं हरता बन्धुभिर्दत्तां राक्षसधर्मेण उद्वहता इत्यर्थः । [ "राक्षसो युद्धहरणात्" इति याज्ञवल्क्यः । "गान्धर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ" इति मनुः ] 'त्वया चैद्यो विप्रकृतः' विप्रियं प्रापितः । तथाहि 'वैरमूलमग्र्यं' कटुमूलस्य 'वैरतरोः स्त्रियः महत् 'प्रधानं' मूलं' हि निश्चयेन [ रूपकसंसृष्टोऽयं सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ] ॥ ३८ ॥

1. Caused to suffer injury. 2. The अलङ्कार is अर्थान्तरन्यास of the kind in which the particular is supported by the general and it is mixed up with a रूपक ( Char. )

Sara—अयि शौरे! वाच्य, अपकारात् कृत्रिमशत्रुरपि त्वं शिशुपालस्य यतः वाग्दत्ता रुक्मिणी त्वयाहृता ॥ ३८ ॥

CHARCHA

1. विप्रकृतः—वि+प्र+कृ+क्त कर्मणि injured. Comp, 'विप्रकृतः पन्नगः फणं कुरुते'—*Sakuntala*, VI. अनुक्त कर्त्ता is त्वया ।

2. चैद्यः—चेदि was the kingdom of Sisupala. See under चैद्यम्, sl I. and Canto I, sl. 75. चेदीनां राजा चेदि+ष्यञ् चैद्यः । Refers to Sisupala.

3. रुक्मिणीम्—Rukmini was the daughter of king Bhishmaka. ताम् । She was betrothed to Sisupala but was seized and abducted by Krishna before the marriage could be celebrated.

4. हरता—हृ+शतृ कर्त्तरि हरत् seizing. तेन । Q. त्वया । Krishna seized her by force, This is a form of marriage—

It is Rakshasa marriage. See Mall. 'राक्षसो—'। There are eight forms of marriage viz., ब्राह्म, दैव, आर्ष, प्रजापत्य, आसुर, गान्धर्व, राक्षस पैशाच। 'ब्राह्मो दैवस्तथा चार्षः प्राजापत्यस्तथासुरः। गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥' Manu enjoins the राक्षस and गान्धर्व for the क्षत्रिय। Dushyauta married Sakuntala under the गान्धर्व form.

5. बद्ध &c.— बद्धं मूलम् अनेन बद्धमूलः that which has taken root. बहु—। तस्य। Q. वैरतरोः।

6. वैरतरोः—वीरस्य भावः कर्म वा इति वीर+अण् वैरम् enmity. वैररूपः तरुः वैरतरुः tree of enmity कर्मधा—like शाकपार्थिव (रूपककर्मधा—)। तस्य। The उपमितकर्मधा—with the वाक्य 'वैरं तरुरिव' is avoided, because 'स्त्रियो हि मूलम्' establishes अभेद between स्त्रियः and मूलम्। उपमितकर्मधा—recognises भेद।

7. *Remark*.- Malli's अर्थान्तरन्यास seems questionable. The first half of the verse gives the fact—Kirshna seized Rukmini. The second half says - women are at the root of all mortal enmity. The two statements are not at all related as सामान्य and विशेष। The first case with stretch of imagination can be called a particular case of the second. The two are but the major and the minor premise of a syllogism the conclusion of which being obvious, is suppressed. Thus :— (I) You stole Sisupala's wife. (2) Wife-stealer is a mortal enemy. (3) You are Sisupala's mortal enemy.

8. *Voice*—... हरन् त्वं चैद्यं विप्रकृतवान् स्त्रीभिः महता मूलेन (भूयते)।

39. *He paid you back by besieging Dwaraka.*

त्वयि भौमं गते जेतुमरौत्सीत् स पुरीमिमाम्।
प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव॥ ३९॥

Prak—स: इमां पुरीम् अरौत्सीत [ In retaliation he had laid siege to this city of द्वारका ], How could he defy me thus ?— त्वयि भौमं जेतुं गत ( सति ) अरौत्सीत् [ He besieged the city after you had marched against demon Naraka ]. How mean of him !—अन्धकार: प्रोषितार्यमणं मेरो: तटीमिव [ There is no question of meanness here. That is policy. Look how Darkness pervades the slopes of Meru. He waits for an opportunity and rushes out when the sun is away on the other side of the slopes, ]. 39.

*Prose*—त्वयि भौमं जेतुं गते [सति] स इमां पुरीं प्रोषितार्यमणं मेरो: तटीम् अन्धकार इव अरौत्सीत् ॥ ३९ ॥

Eng,—You having gone to subdue the son of Bhumi (Narakasura), he besieged this city, like darkness veiling the slopes of Meru from which Aryman ( sun ) is absent. 39.

Bengali—সূর্য্যের অনুপস্থিতিতে অন্ধকার যেমন মেরুপর্ব্বতের তট আক্রমণ করে, সেইরূপ তুমি যখন নরকাসুরকে জয় করিতে গেলে, তখন শিশুপাল এই দ্বারকা পুরীর অবরোধ করিয়াছিল ॥৩৯॥

Expl.—In retaliation Sisupal injured us, not openly in defiance of our prowess as you did in defiance of his, but stealthily by besieging this city when you were away on an expedition against the demon Narak. He too has thus become a कृत्रिम enemy unto us. see Prak. 39.

Malli—अथ तेनापि त्वं विप्रकृत इत्याह त्वयीति । 'त्वयि' भूमेरपत्यं पुमांसं 'भौमं' नरकासुरं 'जेतुं' गते सति 'स:' चैद्य: 'इमां पुरीं' द्वारकां 'प्रोषित: अर्यमा' सूर्य: यस्या: तां 'मेरो: तटीं' सानुम् 'अन्धकार इव अरौत्सीत्' रुद्धवान् [ रुधेरनिटो लुङि सिचि वृद्धि: । उपमालङ्कार: ] ॥ ३९ ॥

Sara—तेनापि कृतस्तवापकार: । नरकविषये व्यापृते त्वयि स द्वारकां रुरोध ।

## CHARCHA.

1. त्वयि—भावे ञसौ।

2. भौमम्—भूमेरपत्यं पुमान् इति भूमि+अण् शिवादि=भौमः the son of the earth *i, e*, नरकासुर। तम्। The allusion is to the वराहावतार when Vishnu married Earth the issue of the marriage being नरक who was given the kingdom of Pragjyotisha which is modern Assam. He proved to be a tyrant and Krishna killed him in open fight. Here by the rule 'इतश्चानिञः" the form भौमेय was expected with the affix ढक। But special provision is made for अण् after भूमि by including the word in the शिवादि list, The rule 'शिवादिभ्योऽण्' becomes then available yielding भौम।

3. अरौत्सीत्—रुध+लुङ् तिप besieged. रुधिर् रुधे, रुरोध-रुरुधे, अरौत्सीत्-अरुद्ध-अरुधत, रोत्स्यति-ते। Malli's steps are रुध्+लुङ् तिप्=अ+रुध्+सिच्+तिप=अरुध्+सिच+ईत् ('अस्तिसिचोऽपृक्ते'= अरौध्+स्+ईत् ('वदव्रजहलन्तस्याचः')=अरौत्सीत्। The poet does not say रुरोध and Malli. gives रुद्धवान् avoiding रुरोध; because the fact is within the knowledge of Balarama and the rule 'परोक्षे लिट्' is in the way.

5. प्रोषित &c.—प्र+वस+क्त कर्त्तरि प्रोषित absent. अर्य्यमन् sun. प्रोषितः अर्य्यमा यस्याः (इनी) प्रोषितार्य्यमा from which the sun is absent. बहु—। ताम्। Qual. तटीम्। We have optionally two other forms here, thus:—(2) प्रोषितार्य्यमन्+डाप् स्त्रियाम्=प्रोषितार्य्यमा (आकारान्त); or (3) प्रोषितार्य्यमन्+ङीप् स्त्रियाम्=प्रोषितार्य्यम्णी। The first is declined like राजन् except अर्य्यमणौ अर्य्यमणः अर्य्यमणम् अर्य्यमणौ; the second like लता; the third like गौरी or नदी।

5. मेरो:—मेरु is the golden mountain about which the sun is supposed to revolve. so that the romote side is always dark.

6. अन्धकार:—अन्धं करोति इति अन्ध+कृ अण् कर्त्तरि अन्धकार: or अन्धकारम् ( अर्द्धचादि )।

7, *Voice.*—... तेन इयं पुरी प्रोषितार्यमा नष्टी अन्धकारिणा क्रियते।

*4.* He abducted the wife of Babhru.

**आलप्यालमिदं बभ्रोर्यत् स दारानपाहरत्।**

**कथापि खलु पापानामलमश्रेयसे यतः॥ ४०॥**

*Prak.*—इदम् आलप्य अलम् [ This fact must not be mentioned ]. Which fact ?—स बभ्रो: दारान् अपाहरत् इति यत् [ The fact that he abducted the wife of Babhru ]. Why not mention it ?—यत: पापानां कथा अपि खलु अश्रेयसे अलम् [ Because even the talk of sin is baneful ]. 40.

*Prose*—स बभ्रो: दारान् अपाहरत ( इति ) यत् इदम् आलप्य अलम्। यत: पापानां कथा अपि खलु अश्रेयसे अलम् ॥ ४० ॥

*Eng.*—Away with mentioning that he abducted the wife of Babhru, for, even the mention of sin is enough for mishap. 40.

*Beng.*—শিশুপাল বভ্রুর স্ত্রী অপহরণ করিয়াছিল এ কথা বলিয়া কাজ নাই, কারণ পাপের উল্লেখেও অমঙ্গল হইয়া থাকে ॥৪০॥

*Expl.*—See Eng. above. 40,

***Malli***—अपकारान्तरमाह आलप्येति। 'स:' चैद्य: 'बभ्रो:' यादवभेदस्य दारान्' भार्य्याम् [ 'भार्या जायाथ पुंभूम्नि दारा स्यात्तु कुटुम्बिनी' इत्यमर: ] अपाहरत् इति यत् इदं दारापहरणम् 'आलप्य' उच्चार्य्य 'अलं' नालपनीयमित्यर्थ: [ 'अलं खल्वो: प्रतिषेधयो: प्राचां क्त्वा' इति क्त्वाप्रत्यये समासे ल्यबादेश: ]। 'यत: पापानां' 'कथा' उच्चारणम् 'अपि' [ 'चिन्तिपूजिकथि— ( कथि ) कुम्बि—' इति अ ( ? इत्यादिना अङ् ) प्रत्यय: ] 'अश्रेयसे' अन-

र्थाय 'अल' समर्था खलु [ 'नमःस्वस्ति—' इत्यादिना चतुर्थी। अत्र निषिध्य-मानालपननिषेधनसमर्थनात् कार्येण कारणसमर्थकः अर्थान्तरन्यासः ] ॥४०॥

2. Here we have अर्थान्तरन्यास that supports the cause by the effect, because mention is being prohibited and the prohibition is supported.

*Sara*—अहो दुर्नयः। तदा स वधोद्दारानपाहरत्।

CHARCHA

1. आलप्य—आ+लप्+ल्यप्। गतितत्—। अलंयोगे क्त्वा which is changed into ल्यप् by the rule 'समासेऽनञ्पूर्वे क्त्वो: ल्यप्'। The rule for क्त्वा here means—क्त्वा is attached optionally with अलम् and खलु as उपपद in the sense of prohibition. As an instance of खलु compare खलु क्त्वा, sl. 70, *infra.*

2. अपाहरत्—अप+हृ+लङ् तिप् abducted. हरति ते, जहारजह्रे, हरिष्यति-ते, अहार्षीत्-अहृत। Its obj. is दारान् (See Malli).

3. कथा—कथनम् इति कथ+णिच् स्वार्थे (चुरादि)+अङ् भावे स्त्रियाम्। Note the copyist's slips here in the Malli. The rule for अङ् in full is 'चिन्तिपूजिकथिकुम्बिचर्चश्च'।

4. अश्रेयसे—प्रशस्य laudable. अतिशयेन प्रशस्यम् इति प्रशस्य+ईयसुन्=श्र+ईयसुन् or ज्य+ईयसुन्=श्रेयः or ज्यायः welfare; used substantively. न श्रेयः अश्रेयः mishap, नञ् तत्—। तस्मै। अलं योगे चतुर्थी। The rule is 'नमःस्वस्तिस्वधास्वाहालंवषड्योगाच्च' —चतुर्थी is attached in connection with नमस् स्वस्ति स्वधा, स्वाहा अलम् and वषट्। The अलम् here is in the sense 'capable' and includes itself and its synonyms, such as प्रभु, समर्थ &c. Comp. also Kumar V. 88.

5. यतः—This gives the reason why आलप्य अलम्। No use speaking because (यतः) &c. उत्तरवाक्यगतत्वेन उपादानात् न तच्छब्दव्यपेक्षा।

6. *Voice*—तेन दारा: येन···अपाक्रियन्त···येन (भूयते) कथया... (भूयते)।

*41. He is in fact an enemy now by interchange of wrongs.*

**विराद्ध एवं भवता विराद्धा वहुधा च न:।**
**निर्वर्त्तयत्यरि: क्रियया स श्रुतश्रवस: सुत:॥ ४१॥**

*Prak.*—श्रुतश्रवस: स सुत: क्रियया अरि: निवर्त्तयते [ That son of our aunt Srutasvavas becomes an enemy by deeds ]. How so?—एवं भवता विराद्ध . . . [ Because he was wronged by you in the manner as aforesaid ]. That is an one-sided affair—वहुधा न: विराद्धा च स: [ Why one—sided? He too has wronged us in many ways as I have already said ].

*Prose*—एवं भवता विराद्ध: वहुधा न: च विराद्धा श्रुतश्रवस: सुत: स: क्रियया अरि: निर्वर्त्तयते॥ ४१॥

*Eng.*—Thus wronged by thee, the wrong-doer unto us in many ways indeed, that son of Srutasravas is being turned into an enemy by deeds. 41.

Beng.—পিতৃস্বসা শ্রুতশ্রবার পুত্র শিশুপালের তুমি অপকার করিয়াছ। সেও নানা প্রকারে আমাদের অনিষ্ট করিয়াছে। এইরূপে কার্য্যের গতিতে সে আমাদের শত্রু হইয়া উঠিয়াছে ॥৪১॥

Expl.—See prak and Eng. above 41.

*Malli*—फलितमाह विराद्ध इति। 'एवं भवता विराद्ध:' विप्रकृत: [ राधेर्रनिट: कर्मणि क्त: ] 'वहुधा न:' अस्माकं 'च विराद्धा' विप्रकर्त्ता। 'श्रुतश्रवा' नाम हरे: पितृष्वसा। तस्या: 'सुत:' पैतृष्वसेयत्वात् सहजमित्रमपि इति भाव: स:' चैद्य: 'क्रियया' पूर्वोक्तान्योऽन्यापक्रियया 'अरि: निर्वर्त्तयते' कृत्रिम: शत्रु: क्रियते। अतो वलीयस्त्वादनुपेक्ष्य इति भाव: ॥ ४१॥

1. The क्त is in the कर्मवाच्य after राध which is अनिट्॥

2. Hence this, being of greater moment, cannot be overlooked ( Also see Charcha under श्रुतश्रवसः सुतः ) ।

*Sara*—इत्थं कृतापकारः शिशुपालः एकान्तत एव नः शत्रुः ।

CHARCHA

1. विराद्धः—वि+राध ( स्वादि सकर्मक )+क्त कर्मणि wronged.

2. विराद्धा—वि+राध ( स्वादि सकर्मक )+तृच् कर्त्तरि wrong doer ; qual. सः ।

3. बहुधा—बहु+धाच् in many ways ; अव्यय qualifying the क्रिया in विराद्धा ।

4. नः—कर्मणि षष्ठी owing to the कृत् in विराद्धा । Thus तिङ्योगे—सः विराध्नोति अस्मान् ; कृद्योगे—सः विराद्धा नः ।

5. निर्वर्त्यते—निर+वृत+णिच्+लट् ते कर्मणि is being turned into. वर्त्तते, ववृते वर्त्तिष्यते—वर्त्स्यति—अवर्त्तिष्ट—अवृतत् ।

6. श्रुतश्रवसः सुतः—This reference to the mother is to show the transformation. He was a सहजमित्र, but by deeds has become an enemy. Hence it furnishes an illustration of what is enunciated in sl. 36.

7. Voice—...विराद्धम्...विराद्धारम्...सुतं क्रिया अरिं निर्वर्त्तयति ।

*42. Remember Sisupala will not forget his wrongs.*

**विधाय वैरं सामर्षे नरोऽरौ य उदासते ।**
**प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ४२ ॥**

Prak—ते अभिमारुतं शेरते [ Such people lie against the wind ]। What is the harm ?—कक्षे उदर्चिषं प्रक्षिप्य शेरते [ They first set fire to a dry forest, and then foolishly lie against the wind so as to be overtaken and consumed by the fire ]. Who do so ?—ये नरः सामर्षे अरौ वैरं विधाय उदासते [ I mean those people who wrong a relentless enemy and then lie indifferent They are just

such fools as the man who fires the forest and then goes to sleep to the leeward ]. 42.

*Prose*—ये नरः सामर्षे अरौ वैरं विधाय उदासते ते कक्षे उदर्चिषं प्रक्षिप्य अभिमारुतं शेरते ॥ ४२ ॥

Eng.—People who sit listless after having done a wrong to an irate [ Or—already angered ] foe, really lie wind-ward ( ? leeward ) after setting fire to a dry forest. 42.

Beng.—ক্রুদ্ধ স্বভাব ( Or কুপিত ) শত্রুর প্রতি বৈরাচরণ করিয়া যাহারা নিশ্চিন্ত রহিয়া আছে তাহারা যেন শুষ্ক বনে অগ্নি প্রদান করিয়া বায়ুর দিকে শুইয়া আছে ॥৪২॥

Expl.—See Prak—"Those people who.. indifferent are just such...leeward." 42.

*Malli*—अत्रापि उपेक्षायां दोषमाह विधायेति 1 । 'ये नराः' पुमांसः [ 'स्युः पुमांसः पञ्चजनाः पुरुषाः नराः' इत्यमरः ] 'सामर्षे' प्रागेव सरोषे 'अरौ वैरं' विधाय स्वयञ्च ( ? म् ) अपकृत्य इत्यर्थः 'उदासते' उपेक्षन्ते 'ते' नराः 'कक्षे गुल्मे [ 'कक्षस्तु गुल्मे दोर्मूले पापे जीर्णवने तृणे' इति वैजयन्ती ) 'उदर्चिषम् अधिकज्वालम् अग्निं' 'प्रक्षिप्य' अभिमारुतम् [ आभिमुख्येऽव्ययीभावः ] 'शेरते' स्वपन्ति तद्वन्नाशहेतुरित्यर्थः [ 'शीङोरुट्' इति रुडागमः । अत्र 'ते उदासते ते शेरते इति विशिष्टोदासीनशयनयोः ( ? विशिष्टोदासनशयनयोः ) वाक्यार्थयोः निर्दिष्टकत्वासम्भवात् साम्यलक्षणायाम् असम्भवद्वस्तुसम्बन्धी वाक्यार्थनिदर्शनेतिरिति ( ? वाक्यार्थनिदर्शनेतिरिति असम्भवद्वस्तुसम्बन्धो ) निदर्शनाभेदः । न चायं दृष्टान्तः । वाक्यभेदेन प्रतिबिम्बकरणाभावेऽपि तस्य उत्थानात् । अत्र तु वाक्यार्थे वाक्यार्थसमारोपात् वाक्यैकवाक्यतायां तदभावः इत्यलङ्कारसर्वस्वकारः 2 ॥ ४२ ॥

1. Here by विधाय &c, he also points out the harm of neglect. 2. Here the अलङ्कार is निदर्शना of the kind असम्भवद्वस्तु सम्बन्ध because the sense is got by assuming

साद्दश्य, since it is impossible to have the stated indentity between the special kind of उदासन and शयन which are the वाक्यार्थ of the two statements शे उदसने and ने शेरते। It is not a case of दृष्टान्त because according to the author of the अलङ्कारसर्वस्व, that (दृष्टान्त) similarity is gathered from two different वाक्य, that is absent here because by ascribing the sense of one वाक्य to the other, the वाक्य are rendered identical.

*Sara*—अत: सकोप: ज्ञातपकारश्च तथापि य उदासीन: तसान्न् वो मृग्र:

## CHARCHA

1. विधाय—वि+धा+ल्यप् having done.

2. वैरम्—deriv. Sl. 38. Enmity. वेरं विधाय having done wrong or injury. In वैरम् we do not get घञ् भावे, for panini uses वैर in his sutra.

3. सामर्षे—मृष+घञ् भावे मर्ष: forbearance. न मर्ष: अमर्ष: vindictiveness, relentlessness; नञ् तत्—। तेन सह वर्त्तमान: बहु—। Malli, renders, सरोषे। It seems better to say असहने। The reference is to a man who never forgives a wrong... सहामर्ष also is correct.

4. नर:—Nom, plural of नृ। Decline ना नरौ नर: &c.. like धातृ।

5. उदासते—उद्+आस लट् अन्ते। remains cereless. relaxes vigilance. आसाञ्चक्रे—आसामास—आसाम्बभूव, आसिषाते,— आसिष्ट।

6. प्रक्षिप्य—प्र+क्षिप्+ल्यप् having set.

7. उदर्चिषम्—उद्गता: or उद्गतानि अर्चिष: or अर्चींषि अस्य that which is in flames, बहु—। It is an attributive, here used substantively for fire. तम्।

8. कच्चे—Malli. has गुल्मे। But जीर्णवने suits better.

9. शेरते—शी+रुट्,अन्त lie. The steps are शी+अ=शी+अते=शी रते=शेरते। शिश्ये, शयिष्यते, अशयिष्ट। The rule for र is 'शीङो रुट्'—अ in the आत्मनेपद of शी takes the augment रुट् i, e., अते which was expected becomes रते: Nom. ते।

10. अभिमारुतम्—मारुत wind, It is a corruption of मारुद don't cry. This contains an allusion. When wind the younger brother of इन्द्र was in his mother's womb, Indra through jealouy, cut him up with the thunder-bolt. The boy shrieked in pain, and fearing lest the cries of the child should rouse the suspicions of the mother, इन्द्र whispered the words मा रुद into the ears of the boy. The child however was saved and received the name मारुद in its corrupt form मारुत। The story is given at length in the Ramayana. मारुतम् अभिलक्ष्य इति अभिमारुतम् facing the wind. अव्ययः—by the rule 'लक्षणेनाभिप्रती आभिमुख्ये'। Adv, Qual. शेरते। Here note that when the forest is ablaze, the danger is to the leeward (अनुमारुत) of the fire and not to the wind-ward (अभिमारुत)। To lie to the leeward of the fire means death which one will escape lying wind-ward of the fire. Leeward and windward have to be taken with reference to the fire. The proper word seems then to be अनुमारुतम् for, if the sleeper is to the wind ward of the fire and lies with his face to the wind (अभिमारुत) he courts no danger whatever. Could it be that the poet really wrote अनुमारुतम्?

11. Voice— यः कृमिः...उदास्यते तैः...शय्यते।

43. His offence is intolerable being grave and repeated.

मनागनभ्यावृत्त्या वा कामं क्षाम्यतु यः क्षमी ।
क्रियासमभिहारेण विराध्यन्तं क्षमेत कः ॥ ४३ ॥

Bruh.—यः क्षमी (सः) कामं क्षाम्यतु [Let those who are forgiving by nature forgive offence if they like; I am not going to put up with them]. What offences?—मनाक् अनभ्यावृत्त्या वा विराध्यन्तं क्षाम्यतु [They may overlook small wrongs or wrongs not repeated]. But suppose the offence is a grave one and oft-repeated—क्रियासमभिहारेण विराध्यन्तं कः क्षमेत [Such repeated offences no one can tolerate: and Sisupala's offences are of that character]. 43.

*Prose*—यः क्षमी स मनाक् अनभ्यावृत्त्या वा (विराध्यन्तं) कामं क्षाम्यतु। क्रियासमभिहारेण विराध्यन्तं कः क्षमेत?

Eng.—Let one who is forbearing forgive one offending slighty or without repetition. But who will excuse one offending gravely and repeatedly? 43.

*Beng.*—যে অল্প অনিষ্ট করে বা একবার মাত্র অনিষ্ট করে তাহাকে ক্ষমাশীল পুরুষ না হয় ক্ষমা করুন, কিন্তু যে বারবার গুরুতর অনিষ্ট করিতেছে তাহাকে কে ক্ষমা করিবে?

Eng.—See Eng. above.

*Malli*—तथापि बान्धवत्वात् सोढव्य इत्याशङ्क्याह—मनागिति। 'यः क्षमी' सहनः ['शमित्यष्टाभ्यो घिनुण्' इति घिनुण् प्रत्ययः] स सोढा 'मनाक्' अल्पम् अभ्यावृत्ती अपि इति भावः 'अनभ्यावृत्त्या' सकृद्वा अनल्पमपि इति भावः 'विराध्यन्तम्' अपकुर्वाणं 'कामं' भृशं 'क्षाम्यतु' क्षमताम् [सम्भावनायां लोट्। 'शमामष्टानां दीर्घः श्यनि'] 'क्रियासमभिहारेण' भृशं पौनः-पुन्येन च इत्यर्थः [न च पुंवाक्येषु अनेकार्थत्वं दोषाय] विराध्यन्तं कः क्षमेत

सहेत सोढुं शक्नुयात, न कोऽपि इत्यर्थः [ 'शकि लिङ्' इति शकार्थे लिङ्। क्षमु अहसने दैवादिको भौवादिकश्च ॥ ४२ ॥

In a male speaker (or better—in non-scriptural language i. e. in classical language) the use of a word in more than one sense is not a detraction. ( पुंवाक्य in व्यवहारभाषा means classical language ).

*Sara*—सत्योऽपकारः मन्त्रकृतो वा चन्तुं शक्यते किन्तु मुक्तवन्कृतं द्रढ्य कथं क्षम्यताम्।

CHARCHA

1. मनाक्—An अव्यय meaning अल्प। 'किञ्चिदीषन्मनागल्पे' इत्यमरः। Qual. the क्रिया in विराध्यन्तम्।

2. अनभ्यावृत्त्या—अभि+आ+वृत+क्तिन् भावे =अभ्यावृत्ति repetition. न अभ्यावृत्तिः, नञ्तत्—। तया। करणे ३या। करण of the क्रिया in विराधयन्तम्।

3. कामम्—काम fully भृश (Malli.), Qual. क्षाम्यस्तु। Or कामम् is अव्यय implying अकामानुमति reluctant assent. कामं क्षमी क्षाम्यतु—granted that one of forgiving dispositon will forgive.

4. क्षाम्यतु—क्षम (दिवादि)+लोट तुप might forgive. क्षाम्यति चक्षाम, क्षमिष्यति—क्षंस्यति, अक्षमत्। Malli's rule 'शमाम्—"means that the eight roots beginning with शम lengthen their vowel when श्यन् follows. Malli. has सम्भावनायां लोट'। This is after the भाष्य। Panini does not give any such rule. We may also say विधौ लोट by the rule 'विधिनिमन्त्रण—"taken with 'लट् च"।

5. क्षमी—क्षाम्यति इतिक्षम+घिनुण कर्त्तरि ताच्छील्ये। 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इति वृद्ध्यभावः।

6. क्रिया &c.—कृ+श भावे क्रिया act. सम्+अभि+हृ+घञ् भावे समभिहारः grouping. क्रियाणां समभिहारः क्रियासमभिहारः grouping of actions or intensification of an act इतत्—।

The word however is restricted to imply पौनःपुन्यं or भृशार्थं । 'पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः'—Vrittikara. Here it has both these senses. तेन, i, e., repeatedly and excessively. इयाकरणे । On the anomaly of a single word being used in two different senses in the same context, Malli says 'न च पुंवाक्येषु—" i. e., in non-scriptual language i. e., in भाषा is allowed such liberty.

7. विराधान्तम्—वि+राध (दिवादि सकर्मक)+शतृ कर्त्तरि विराधत् (प्रातिपदिक) one who offends, २म्। Qual. जनम् understood.

8. क्षमेत—क्षम+लिङ् ईत could forgive. क्षमते, चक्षमे, क्षमिष्यते—क्षंस्यते, अक्षमिष्ट—अक्षंस्त । See Malli.

9. Voice— येन क्षमिता ( भूयते ) तेन...( विराधन् ) क्षम्यताम् । ...विराधन् केन क्षमेत ।

44. Offence demands retaliation.

अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ४४ ॥

N. B. Indelicate. Malli. alone follows.

*Malli*—ननु सर्वदा क्षमा एव पुंसो भूषणम् अतः अपराधेऽपि क्षन्तव्यम् । [illegible] आह—अन्यदेति । 'अन्यदा सुरतव्यतिरिक्ते काले योषितः लज्जा इव पुंसः अन्यदा अनभिभवे 'क्षमा शमः 'भूषणम् । परिभवे तु योषितः सुरतेषु वैयात्यं धार्ष्ट्यम् 'इव [ धृष्टे धृष्णुर्वियातश्च इत्यमरः ] पराक्रमः पौरुषं भूषणं [illegible] इति 'भूषणम् अलंकरणम् । (एवञ्च अक्रियावचनत्वात् नियतलिङ्गत्वात् विरोध ( ? ) इति वल्लभोक्तं अनुपपन्नम्) ॥ ४४ ॥

45. Live not under the insults of an enemy.

मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः ॥ ४५ ॥

Prak—अजननिः एव तस्य अस्तु [May he not be born at

all ]. Who ?—जननीक्लेशकारिणः तस्य [ The fellow who occasions to his mother the pangs of child-birth ]. Every one does it—यः मा जीवन् जीवति तस्य [ True, but I am speaking of the man who having pained his mother by his birth, lives a wretched life and brings no satisfaction to his mother in return for her pains ]. Well who is such a man ?—यः परावज्ञादुःखदग्धः अपि जीवति [ Such is the man who has to live under the insults of his enemy ]. 45.

*Prose*—यः परावज्ञादुःखदग्धः अपि मा जीवन् जीवति जननीक्लेशकारिणः तस्य अजननिः एव अस्तु ॥ ४५ ॥

Eng.—May not the odious birth itself come causing but pain to his mother, unto the man who, though withered by the misery of the slights of the enemy, would be living his wretched life. 45.

Beng—শত্রুর অপমানের দুঃখে দগ্ধ হওয়ায় যে ব্যক্তি ঘৃণিত জীবন ধারণ করে তাহার বরং জন্ম না হওয়াই ভাল ছিল, কারণ তাহার জন্মে জননীর ক্লেশ মাত্র ফল অন্য কোনও ফল নাই।

Expl.—See under Eng and *P*rak. above. 45

***Malli***—अथ परिभवेऽपि अपराक्रमिणं विभिनिन्दन्नाह मा जीवन्निति। यः परस्य अपकर्त्तुः 'अवज्ञया' असानेन ( ? अपमानेन ) यत् 'दुःखं' तेन 'दग्धः' तप्त अतएव माजीवन्, गर्हितजीवी सन् [ 'माङ्याक्रोशे' इति लटः शत्रादेशः *1* ] 'जीवति' प्राणान् धारयति 'जनन्याः क्लेशकारिणः' गर्भधारणप्रसवादिवेदनाकारिणः तद्व्यतिरिक्तार्थक्रिया हीनस्य *2* इत्यर्थः 'तस्य अजननिः' अनुत्पत्तिः 'एव अस्तु' जननीक्लेशनिवृत्त्यर्थम्, इति भावः [ 'आक्रोशे नञ्यनिः" इति जनिधातोः अनिप्रत्ययः *3* ] ॥ ४५ ॥

*1. See Charcha 2.* 'तस्मात् जननीक्लेशकरणात् व्यतिरिक्तस्य' अधिकस्य अर्थस्य' प्रयोजनस्य या 'क्रिया' अनुष्ठानं तया 'हीनस्य विरहितस्य। जननीक्लेशं विना किमप्यनुत्पादकस्येत्यर्थः। *3. See Charcha.*

